**सूत्रम्—जे भिक्खू चाउम्मासियं परिहारट्ठाणं पडिसेवित्ता आलोएज्जा अपलिउंचिय आलोएमाणस्स चाउम्मासियं, पलिउंचिय आलोएमाणस्स पंचमासियं ॥ सू० ४ ॥**

छाया—यो भिक्षुश्चातुर्मासिकं परिहारस्थान प्रतिसेव्य आलोचयेत्-अपरिकुच्यालोचयत चातुर्मासिक परिकुच्य आलोचयतः पाञ्चमासिकम् ॥ सू० ४ ॥

चूर्णी- 'जे भिक्खू' इत्यादि । 'जे भिक्खू' य' कश्चिद्भिक्षुः श्रमणः श्रमणी वा **'चाउम्मासियं'** चातुर्मासिकम्—चातुर्मासेन चतुर्भिः मासैः निर्वर्तनयोग्यम् **'परिहारट्ठाणं'** परिहारस्थानम्—पापस्थानम् **'पडिसेवित्ता'** प्रतिसेव्य—प्रतिसेवनां कृत्वा **'आलोएज्जा'** आलोचयेत्—आलोचनांकर्त्तुमभिलषेत् **'अपलिउंचिय'** अपरिकुच्य-मायामकृत्वा **'आलोएमाणस्स'** आलोचयतः-आलोचनां कुर्वतः श्रमणादेः **'चाउम्मासियं'** चातुर्मासिकम्—चतुर्भिर्मासैः संपादनयोग्यम् लघुकं गुरुकं वा प्रायश्चित्तं प्रतिसेवनानुसारेण दद्यात् **'पलिउंचिय आलोएमाणस्स पंचमासियं'** परिकुच्यालोचयतः पाञ्चमासिकम्, तत्र परिकुच्य मायापूर्वकमालोचनां कुर्वतः पाञ्चमासिकम्-मासपञ्चकेन निर्वर्तनयोग्यं लघुक गुरुकं वा प्रतिसेवनानुसारि प्रायश्चित्तं गुरुर्दद्यादिति। अयं भावः—यत्रैवापराधे मायारहितस्य शिष्यस्य श्रमणस्यान्यस्य वा चातुर्मासिकं लघुकं गुरुकं वा प्रतिसेवनानुसारि प्रायश्चित्तं भवति तत्रैवापराधे मायासहितस्य पाञ्चमासिकं लघुकं गुरुक वा प्रतिसेवनानुसारि प्रायश्चित्त दद्यात्, मासाधिक्यस्य मायाप्रयोज्यत्वात् । अत्र मालाकारयोर्दृष्टान्तः—एकस्मिन्नगरे द्वौ मालाकारौ निवसतः। तत्रैकेन वसन्तसमये बहूनि पुष्पाणि आनीय विधिना स्थापितानि, तानि दृष्ट्वा क्रयका उपतिष्ठन्ति । उपस्थितेषु तेषु क्रयकेषु माला निर्मिता । तैर्ज्ञात्वा मालाक्रेतृभिः तस्मै बहु मूल्यं दत्तं पुष्कलो लाभो जातः । अपरेण न पुष्पाणि आनीतानि, नैव च माला निर्मिता अतस्तत्समीपे न कोऽपि क्रेता आगत', न तेन कोऽपि लाभो लब्धः । एवं यो मूलगुणोत्तरगुणापराधान् न प्रकटयति स शुद्धिं निर्वाणलाभं च न लभते इति ॥ सू० ४ ॥

**सूत्रम्—जे भिक्खू पंचमासियं परिहारट्ठाणं पडिसेवित्ता आलोएज्जा अपलिउंचिय आलोएमाणस्स पंचमासियं पलिउंचिय आलोएमाणस्स छम्मासियं ॥ सू० ५ ॥**

छाया—यो भिक्षुः पाञ्चमासिकं परिहारस्थानं प्रतिसेव्य आलोचयेत् अपरिकुच्यालोचयतः पाञ्चमासिकं परिकुच्य आलोचयतः पाण्मासिकम् ॥ सू० ५ ॥

**चूर्णी**—'**जे भिक्खू**' इत्यादि । '**जे भिक्खू**' यः कश्चिद्भिक्षुः निरवद्यभिक्षणशीलः अष्टविधकर्मक्षपको वा '**पंचमासियं**' पाञ्चमासिकम्-पञ्चभिर्मासैर्निवर्त्तनयोग्यम् '**परिहारट्ठाणं**' परिहारस्थानम्-पापस्थानम् '**पडिसेवित्ता**' प्रतिसेव्य-तत्प्रतिसेवनां कृत्वा '**आलोएज्जा**' आलोचयेत् आलोचनां कुर्यात् तत्र '**अपलिउंचिय**' अपरिकुच्य-मायामकृत्वा '**आलोएमाणस्स**' आलोचयतः '**पंचमासियं**' पाञ्चमासिकं-लघुकं गुरुकं वा प्रायश्चित्तं प्रतिसेवनानुसारि गुरुर्दद्यात् । '**पलिउंचिय आलोएमाणस्स**' परिकुच्य-मायां कृत्वा आलोचनां कुर्वतः श्रमणादेः '**छम्मासियं**' षाण्मासिकम्-लघुकं गुरुकं वा प्रतिसेवनाऽनुसारि प्रायश्चित्तं गुरुभिर्दातव्यमिति । षाण्मासिकप्रायश्चित्तविषये परिकुञ्चके मेघदृष्टान्तः-यथा शरत्कालिको मेघो गर्जनं कृत्वा नो वर्षति, एवं हे शिष्य ! त्वमपि आलोचयामीत्येवं प्रकारेण प्रतिज्ञां कृत्वा आलोचयितु नारब्धवानसि तत्र यदि मायां करिष्यसि तदा प्रतिज्ञाभ्रष्टो भविष्यसि अतः सम्यगालोचय इति । तत्र द्वैमासिकादिपरिहारस्थानेषु मायापूर्वकालोचके यथाक्रममिमे दृष्टान्ताः संभवन्ति तद्यथा-द्वैमासिकं परिहारस्थान प्राप्तस्य प्रतिकुञ्चकस्य दृष्टान्तः तापसः १, त्रैमासिकं परिहारस्थानं प्राप्तस्य योधो दृष्टान्तः २, चातुर्मासिकं परिहारस्थानं प्राप्तस्य मालाकारो दृष्टान्तः ४, पाञ्चमासिकं परिहारस्थानं प्राप्तस्य मेघो दृष्टान्तः ५ । तत्र प्रतिकुञ्चनायां कृतायाम् 'सम्यगालोचय मा प्रतिकुञ्चनां कुरु' एवमुपलब्धो यदि वदेत् भगवन् ! नो कुप्यतु सम्यगालोचयामि । ततः स श्रुतव्यवहारी गुरुः वारत्रयमालोचनां शृणुयात् । तत्र त्रिभिर्वारैर्यदि सदृशमालोचयति तदा ज्ञातव्यं यदयं सम्यक् प्रतिक्रान्त इति तदनन्तरं यद्देयं प्रायश्चित्तं तद्दातव्यमिति । अथ यदि विसदृशमालोचयति तदा यथायोग्यमधिकाधिकं प्रायश्चित्तं दद्यात् यावत् षाण्मासिकमिति ॥ सू० ५ ॥

## सूत्रम्—तेण परं पलिउंचिए वा अपलिउंचिए वा ते चेव छम्मासा ॥ सू० ६ ॥

**छाया—तत परं परिकुञ्चिते वा अपरिकुञ्चिते वा ते एव षण्मासा· ॥ सू० ६॥**

**चूर्णी**—पाञ्चमासिकपरिहारस्थानसूत्राणि कथयित्वा षाण्मासिकपरिहारस्थानविषये प्राह—'**तेण परं**' इत्यादि । '**तेण परं**' ततः परम् ततोऽनन्तरम् पाञ्चमासिकात् परिहारस्थानात् परम्-आलोचनाकाले '**पलिउंचिए वा**' परिकुञ्चिते वा-मायासहिते वा '**अपिलउंचिए वा**' अपरिकुञ्चिते वा मायारहिते वा मायापूर्वकममायापूर्वकं वा आलोचिते इत्यर्थः '**ते चेव छम्मासा**' ते एव-षण्मासा', त एव-प्रतिसेवनानिष्पन्ना एव षण्मासाः षडेव मासा नाधिकं प्रतिकुञ्चनानिमित्तमारोपणं वर्त्तते तदधिकप्रायश्चित्तस्य अभावादिति ॥ सू० ६ ॥

**सूत्रम्**—जे भिक्खू बहुसोवि मासियं परिहारट्ठाणं पडिसेवित्ता आलोएज्जा अपलिउंचिय आलोएमाणस्स मासियं पलिउंचिय आलोएमाणस्स दोमासियं ॥ सू० ७॥

छाया—यो भिक्षु बहुशोऽपि मासिकं परिहारस्थानं प्रतिसेव्य आलोचयेत् अपरिकुच्य आलोचयतो मासिकं परिकुच्य आलोचयतो द्वैमासिकम् ॥ सू० ७ ॥

**चूर्णी**—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चिद्भिक्षुः श्रमणः श्रमणी वा 'बहुसोवि' बहुशोऽपि, अत्र बहुत्व त्रिभृतिक विज्ञेयम्। ततः त्रिप्रभृतिं वारत्रयमपि मासिकं परिहारस्थानं सेवित्वा ऋजुभावेन आलोचयतो मासिकमेव, कपटभावेन आलोचयतस्तु द्वैमासिकमिति॥ सू० ७॥

एवमग्रे 'बहुसोवि दोमासियं' ॥ सू०८ ॥ 'बहुसोवि तेमासियं०' ॥ सू०९ ॥ 'बहुसोवि चाउम्मासियं०' ॥सू० १०॥ 'बहुसोवि पंचमासियं' ॥ सू०११॥ इति चत्वारि सूत्राणि वाच्यानि। एषां चतुर्णामपि सूत्राणामनयैव रीत्या यथायोग व्याख्याऽपि कर्त्तव्या ॥ सू०८-११॥

**सूत्रम्**—तेण परं पलिउंचिए वा अपलिउंचिए वा ते चेव छम्मासा ॥

छाया—ततः परं परिकुञ्चिते वा अपरिकुञ्चिते वा ते एव षण्मासाः ॥ सू० १२॥

**चूर्णी**—'तेण परं' इत्यादि। 'तेण परं' ततोऽनन्तरं षाण्मासिके परिहारस्थाने प्रतिसेविते आलोचनाकाले 'पलिउंचिए वा अपलिउंचिए वा' परिकुञ्चिते वा अपरिकुञ्चिते वा परिकुञ्चनया वा अपरिकुञ्चनया वा आलोचिते इत्यर्थः 'ते चेव' ते एव प्रतिसेवनानिष्पन्नाः स्थिताः 'छम्मासा' षण्मासाः नाधिकमप्रतिकुञ्चनाप्रतिकुञ्चनानिमित्तमारोपणमिति ॥ सू० १२॥

**सूत्रम्**—जे भिक्खू मासियं वा दोमासियं वा तेमासियं वा चाउम्मासियं वा पंचमासियं वा एएसिं परिहारट्ठाणाणं अन्नयरं परिहारट्ठाणं पडिसेवित्ता आलोएज्जा अपलिउंचिय आलोएमाणस्स मासियं वा दोमासियं वा तेमासियं वा चाउम्मासियं वा पंचमासियं वा, पलिउंचिय आलोएमाणस्स दोमासियं वा तेमासियं वा चाउम्मासियं वा पंचमासियं वा छम्मासियं वा तेण परं पलिउंचिए वा अपलिंचिए वा ते चेव छम्मासा

छाया—यो भिक्षुर्मासिकं वा द्वैमासिकं वा त्रैमासिक वा चातुर्मासिकं वा पाञ्चमासिकं वा एतेषा परिहारस्थानानामन्यतम परिहारस्थान प्रतिसेव्य आलोचयेत् अपरिकुच्य आलोचयतः मासिकं वा द्वैमासिक वा त्रैमासिक वा चातुर्मासिकं वा पाञ्चमासिकं वा परिकुच्य आलोचयतः द्वैमासिक वा त्रैमासिक वा चातुर्मासिक वा पाञ्चमासिकं वा षाण्मासिक वा तत पर परिकुञ्चिते वा अपरिकुञ्चिते वा ते एव षण्मासाः ॥ सू० १३ ॥